॥ श्रीवरदराजाचार्यविरचिता ॥

# लघुसिद्धान्तकौमुदी

## विभक्त्यर्थाः/ कारकम्

लघुकौमुदी के ३५ संस्करणों पर आधारित रंगीन संस्करण

इस विषय के शोधपूर्ण सरलव्याख्यान पद्धति पर आधारित वीडियो हमारे चैनल पर उपलब्ध हैं।



संस्कृतसारः

छिद्यन्ते सर्वसंशयाः

**परामर्शकौ**

प्रो. ब्रजभूषणओझा

प्रो. नीलाभतिवारी

इन स्लाइड्स के माध्यम से पढ़ने के लिए अथवा इनकी व्याख्या देखने के लिए हमारे चैनल का अनुसरण करें।



YouTube संस्कृतसारः @sanskrit sar

**प्रस्तोता**

डॉ. श्रीओमशर्मा (व्याकरणविद्याशाखा)

केन्द्रीयसंस्कृतविश्वविद्यालयः,

श्रीरघुनाथकीर्तिपरिसरः देवप्रयागः (उत्तराखण्डः)

# निवेदनम्

यह पठन-पाठनसामग्री 'संस्कृतव्याकरण' में शीघ्र प्रवेशेच्छुक-छात्राध्यापकों के हेतु 'संस्कृतसारः' इस समाजसेवी संस्था द्वारा संस्कृतभाषा की सेवार्थ प्रस्तुत की जा रही है। अतः आपसे निवेदन है कि इन 'लघुसिद्धान्तकौमुदी' स्लाइड्स् व वीडियोज् का अपने पठन-पाठन में पर्याप्त उपयोग कर संस्कृत की सेवा में हमारा सहयोग करें। इन स्लाइड्स् को शुद्धतम बनाने का प्रयास करने पर भी ऐसा सम्भव है कि इसमें कहीं त्रुटि रह गयी हों अतः उनके सुधार के लिए हमें ईमेल द्वारा सूचित करें।



दिनाङ्कः-

16.01.2023

अस्माकं सम्पर्कसूत्राणि—
e-mail अणुवाक्— samskritsaarah@gmail.com
YOUTUBE — संस्कृतसारः @sanskrit sar
FACEBOOK— @sanskrit_shiksha संस्कृतशिक्षा

निवेदकः-

संस्कृतशिक्षा-परिवारः

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# विभक्त्यर्थप्रकरणे प्रथमाविभक्तिः

लघुसिद्धान्तकौमुद्याम्
(विभक्त्यर्थाः/ कारकम्)

विभक्तिः
- सुप्
- तिङ्

- यस्मिन् प्रातिपदिके उच्चारिते सति यस्यार्थस्य नियमेन = सर्वदा ज्ञानं सः (नियतोपस्थितिकः)प्रातिपदिकार्थः।
- 'उच्चैः' इत्युच्चारिते उच्चाधिकरणस्य नियमेन बोधः।
- 'नीचैः' इत्युच्चारितेऽधोऽधिकरणस्य नियमेन बोधः।
- 'कृष्णः' इत्यत्र पुंस्त्वविशिष्टवासुदेवरूपार्थस्य नियमेन बोधः।
- 'श्रीः' इत्यत्र स्त्रीत्वविशिष्टलक्ष्मीरूपार्थस्य नियमेन बोधः।
- 'ज्ञानम्' इत्यत्र क्लीबत्वविशिष्टान्तर्बोधस्य नियमेन बोधः।

अलिङ्गाः= १.अव्ययानि, २.नियतलिङ्गशब्दा उदाहरणानि।

- द्वन्द्वादौ द्वन्द्वान्ते च श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते।
- अनियतलिङ्गशब्दा 'लिङ्गमात्राधिक्ये' उदाहरणानि— तटः, तटी, तटम्
- प्रातिपदिकार्थे प्रथमायां तु 'नामार्थयोरभेदान्वयः' इति नियमेन 'द्रोणाभिन्नो व्रीहिरि'ति बोधः स्यात्, न तु 'द्रोणपरिमितो व्रीहिरि'ति बोधः। अत इष्टशाब्दबोधार्थं परिमाणग्रहणम्।

❖ प्रथमाविभक्तिविधायकं विधिसूत्रम्— (२,३.४६)

**सूत्रम्**— प्रातिपदिकार्थ-लिङ्ग-परिमाण-वचनमात्रे प्रथमा

- नियतोपस्थितिकः प्रातिपदिकार्थः।
- मात्रशब्दस्य प्रत्येकं योगः।

{मूलपाठः}

**अर्थः**— प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये (परिमाणमात्रे) सङ्ख्यामात्रे च प्रथमा स्यात्।

- प्रातिपदिकार्थमात्रे – उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानम्।
- लिङ्गमात्रे – तटः, तटी, तटम्।
- परिमाणमात्रे – द्रोणो व्रीहिः।
- वचनं सङ्ख्या। एकः, द्वौ, बहवः॥

१.प्रातिपदिकार्थमात्रे प्रथमा स्यात्।
२.प्रातिपदिकार्थापेक्षया यत्र लिङ्गमात्रमधिकं भासते ततः प्रथमा स्यात्।
३.प्रातिपदिकार्थापेक्षया यत्र परिमाणमात्रमधिकं भासते ततः प्रथमा स्यात्
४.सङ्ख्यामात्रे प्रथमा स्यात्




- एकः, द्वौ, बहवः इत्यत्र एकत्वाद्यर्थानां प्रकृत्या उक्तत्वाद् **'उक्तार्थानामप्रयोगः'** इति न्यायरीत्या प्रातिपदिकार्थमात्रे इत्यंशेन प्रथमा न स्यात्। अत उक्तन्यायबाधनाय वचनग्रहणम्। तेन एकादिशब्देषु प्रथमा सिद्ध्यति।

❖ सम्बोधने प्रथमाविभक्तिविधायकं विधिसूत्रम्—

**सूत्रम्**— **सम्बोधने च (२,३.४७)**

**अर्थः**— प्रातिपदिकार्थापेक्षया यत्र सम्बोधन मात्रमधिकं भासते ततः प्रथमा स्यात्।

हे राम!

**॥ इति प्रथमा॥**

{मूलपाठः}

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# वाक्यरचना



संस्कृतसाहित्ये कर्तृ-कर्म-भाववाच्यभेदात् त्रिधा वाक्यं सम्पद्यते । यथा—

## १.कर्तृवाच्ये

कर्तुर्हि प्रथमा कार्या पुरुषः प्रथमस्तथा ।
कर्मणस्तु द्वितीया स्याद् वचनं कर्तुवन्मतम् ॥

यथा –

- ✓ बालकः पुस्तकं पठति।
- ✓ बालकौ पुस्तकं पठतः ।
- ✓ बालकाः पुस्तकं पठन्ति ।

## २. कर्मवाच्ये

कर्मणः प्रथमा बोध्या क्रिया कर्मानुसारिणी ।
स्यात् सार्वधातुके यक् च धातोरप्यात्मनेपदम् ॥
कर्तुः स्थाने तृतीया स्यात् कर्मवाच्यस्य संस्थितिः ॥

यथा –

- ✓ कुम्भकारेण घटः क्रियते ।
- ✓ कुम्भकारेण घटौ क्रियेते ।
- ✓ कुम्भकारेण घटाः क्रियन्ते ।

## ३. भाववाच्ये

भावे चायं विशेषस्तु वचनं चैकमीरितम् ।
कर्तुः स्थाने तृतीया स्यात् सर्वत्रैवं क्रमो मतः ॥

यथा–

- ✓ रामेण भूयते।
- ✓ रामाभ्यां भूयते ।
- ✓ रामैः भूयते ।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# प्रथमाविभक्तेर्नियमः प्रयोगश्च



## नियमः—

कर्तरि कर्तृवाच्यस्य कर्मवाच्यस्य कर्मणि।
सम्बुद्धौ नाममात्रे च विभक्तिः प्रथमा भवेत्॥
क्वचिदव्यययोगे च प्रथमा कथ्यते बुधैः॥

यथा –

- ✓ कर्तृवाच्ये – बालकः पुस्तकं पठति।
- ✓ सम्बोधने – हे देव ! अयि सखे! रे वञ्चक!
- ✓ नाममात्रे – घटः,पटः,लेखनी, पत्रम्।
- ✓ कर्मवाच्ये – देवेन ग्रामः गम्यते।
- ✓ अव्यययोगे – विषवृक्षोऽपि संवर्ध्य इत्यादि।

## उदाहरणम्—

ईशः सृजति सर्वाणि स पालयति हन्ति च।
गुरुः प्रपूज्यते शिष्यैस्ततो विद्याद्यवाप्यते॥
बलिर्दानेन विख्यातो हे विधातः! कृपां कुरु।
तदेवं शाब्दिकैरुक्ता प्रथमायामुदाहृतिः॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कर्मसञ्ज्ञाप्रयुक्तद्वितीया विधानम्

लघुसिद्धान्तकौमुद्याम्
(विभक्त्यर्थाः/ कारकम्)

- यस्मिन्नर्थे प्रत्ययो भवति सः अर्थः (वाक्ये) – उक्तः।
- वाक्यस्थाः अन्ये अर्थाः— अनुक्ताः।

अयोध्यायाः → सम्बन्धः

राजा धेनुं हस्तेन निर्धनाय गोष्ठात् गङ्गातीरे ददाति

कर्ता कर्म करणम् सम्प्रदानम् अपादानम् अधिकरणम्

१-अत्र चैत्रः कर्ता तद्वृत्तिः क्रिया प्रीत्यनुकूलव्यापाररूपा तया क्रियया आप्तुं संबन्धुमिष्टतमम् इच्छोद्देश्यं हरिपदार्थरूपं कारकं तस्य कर्मसंज्ञा। मद्वृत्तिव्यापारजन्यप्रीतिरूपफलाश्रयो हरिर्भवतुईदृशेच्छोद्देश्यत्वं हरिपदार्थस्य। एवं ग्रामः संयोगाश्रयो भवतु। तण्डुलः विक्लित्त्याश्रयो भवतु; इत्यादिरूपेच्छा तत्र तत्रोहनीया॥

{मूलपाठः}

- कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— कर्तुरीप्सिततमं कर्म (१,४.४९)**

अर्थः— कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसञ्ज्ञं स्यात्॥

- द्वितीयाविभक्तिविधायकं विधिसूत्रम्—

**सूत्रम्— कर्मणि द्वितीया (२,३.२)**

अर्थः— अनुक्ते कर्मणि द्वितीया स्यात्।

- हरिं भजति।
- अभिहिते तु कर्मादौ प्रथमा – हरिः सेव्यते। लक्ष्म्या सेवितः॥

कर्तास्वनिष्ठव्यापारप्रयोज्यफलेन सम्बन्धुमिष्यमाणं तत् कारकं सत् कर्मसञ्ज्ञं भवति। इति परमार्थः

# अकथितकर्म/गौणकर्म/अप्रधानकर्मणि द्वितीया विधानम्



{मूलपाठः}

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— अकथितं च (१,४.५१)**

**अर्थः—** अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्।

दुह्याच्-पच्-दण्ड्-रुधि-प्रच्छि-चि-ब्रू-शासु-जि-मथ्-मुषाम्।
कर्मयुक् स्यादकथितं तथा स्यान्नी-हृ-कृष्-वहाम्॥ १॥

अयं भावः— कारिकोक्तानां धातूनां पयसादिरूपमुख्यकर्मणा सह क्रियया सम्बध्यमानं गवादिकारकमेवापादानादिविशेषौरविवक्षितं सत्कर्मसञ्ज्ञकं भवति नान्यत्, इति परिगणनं कर्तव्यम्।

१.दुह प्रपूरणे— **गां** दोग्धि पयः। (अपादानम्)

२.टुयाचृ याच्ञायाम्— **बलिं** याचते वसुधाम्। (अपादानम्)

३.डुपचष् पाके— **तण्डुलान्** ओदनं पचति। (करणम्)

४.दण्ड दण्डनिपाते— **गर्गान्** शतं दण्डयति। (अपादानम्)

५.रुधिर् आवरणे— **व्रजम्** अवरुणद्धि गाम्। (अधिकरणम्)

६. प्रच्छ ज्ञीप्सायाम्— **माणवकं** पन्थानं पृच्छति। (अपा.सम्प्र)

७.चिञ् चयने— **वृक्षम्** अवचिनोति फलानि। (अपादानम्)

८.९.ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ—
**माणवकं** धर्मं ब्रूते शास्ति वा। (सम्प्रदानम्)

१०.जि जये— **शतं** जयति देवदत्तम्। (अपादानम्)

११.मन्थ विलोडने— सुधां **क्षीरनिधिं** मथ्नाति। (अपा.)

१२.मुष स्तेये— **देवदत्तं** शतं मुष्णाति। (अपादानम्)

१३. णीञ् प्रापणे १४. हृञ् हरणे १५. कृष विलेखने १६.वह प्रापणे— **ग्रामम्** अजां नयति, हरति, कर्षति ,वहति वा। अधिक.

❑ अर्थनिबन्धनेयं संज्ञा— **बलिं** भिक्षते वसुधाम्। **माणवकं** धर्मं भाषते अभिधत्ते वक्तीत्यादि॥

## ॥ इति द्वितीया॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परिशिष्टद्वितीयाविधानम्



(ण्यन्तावस्था) (अण्यन्तावस्था)

गमनार्थकः— कैकेयी रामं वनं गमयति। (रामो वनं गच्छति।)

ज्ञानार्थकः— गुरुः शिष्यान् व्याकरणं वेदयति। (शिष्याः व्याकरणं विदन्ति।)

भक्षणार्थकः— माता बालं भोजनं भोजयति। (बालो भोजनं भुङ्क्ते।)

शब्दकर्मकः— वैदिकः छात्रान् वेदम् अध्यापयति। (छात्रा वेदमधीयते।)

अकर्मकः— माता शिशुं शाययति। (शिशुः शेते।)

(ण्यन्तावस्था) (अण्यन्तावस्था)

नी— स्वामी भृत्येन भारं नाययति। (भृत्यो भारं नयति।)

वह्— स्वामी भृत्येन भारं वाहयति। (भृत्यो भारं वहति।)

अद्— माता बटुना अन्नम् आदयति। (बटुः अन्नम् अत्ति।)

खाद्— माता बटुना अन्नम् खादयति। (बटुः अन्नं खादति।)

○ अधि-शीङ-स्थाऽऽसां कर्म— ऋषिः कुशपट्टिकाम् अधिशेते। हरिः वैकुण्ठम् अधितिष्ठति। भूपतिः सिंहासनम् अध्यास्ते।

❖ कर्मसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

सूत्रम्— गति-बुद्धि-प्रत्यवसानार्थ-शब्दकर्माऽकर्मकाणामणिकर्ता स णौ (१.४.५२)

अर्थः— गमनार्थक-ज्ञानार्थक-भक्षणार्थक-शब्दकर्मक-अकर्मकधातूनां चाणौ यः कर्ता स णौ कर्म स्यात् ॥

वार्तिकम्— नीवह्योर्न ॥

नाययति वाहयति वा भारं भृत्येन ॥।

वार्तिकम्— आदिखाद्योर्न ॥

आदयति खादयति वा अन्नं बटुना ॥

सूत्रम्— हृ-क्रोरन्यतरस्याम् (१.४.५३)

✓ कालाध्वनोरत्यन्तसंयोगे— मासम् (मासपर्यन्तं) अधीतो नायातः। क्रोशं कुटिला नदी।

# परिशिष्टद्वितीयाविधानम्



- कर्तृवाच्यप्रयोगे स्याद् द्वितीया कर्मकारके।
  धिक् प्रतीत्यादिभिर्योगे व्याप्तावर्थे च सा भवेत्॥
- क्रियाविशेषणं यत् स्यात् क्लीबलिङ्गं हि तद्भवेत्।
  स्यादेकवचनं तत्र द्वितीयायाश्च सर्वदा॥
- उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
  द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते॥
- द्वितीया कर्तृवाच्यस्य प्रयोगे कर्मकारके।
  विना-धिक् प्रति यावद्भिर्योगे च निकषादिभिः॥

- पठन्ति मुनयो वेदान् धर्मो रक्षति धार्मिकम्।
  ज्ञानं विना वृथा जन्म धिक् पापनिरतं जनम्॥
- दीनं प्रति दयां कुर्याद् मृत्युं यावद् विभुं भजेत्।
  द्वारकां निकषा सिन्धुः द्यां भूमिं चान्तरा नभः॥
- पतिज्ञानुमृता पत्नी ऋते विद्यां कुतो यशः।
  अन्तरेण श्रमं विद्या नैव लभ्या कदाचन॥

- धिक्योगे— धिक् कृष्णाऽभक्तम्।
- प्रतियोगे— वृक्षं प्रति विद्योतते विद्युत्। पक्षमेकं परीक्षा भविष्यति। भक्तः शिवम् अभि।
- व्याप्त्यर्थे— आकाशं (व्याप्य) नक्षत्राणि विराजन्ते
- क्रिया विशेषणानि— मृदु पचति। बहुलं धावन्ति।
- उभसर्वत.....— उभयतः कृष्णं गोपाः। सर्वतः कृष्णं गावः। उपर्युपरि लोकं हरिः अधोऽधोलोकं पातालः। अध्यधिपात्रं पात्राणि तिष्ठन्ति।
- ऋतेयोगे— धर्मम् ऋते कुतः सुखम्।
- अन्तरायोगे— अग्निम् अन्तरा कथं पचेत्।
- अन्तरेणयोगे— शास्त्रज्ञानम् अन्तरेण शान्तिं न लभते।
- विनायोगे— ज्ञानं भारः क्रियां विना।
- पृथक्योगे— अन्नं पृथक् (विना) नरो न जीवति।
- नानायोगे— नाना (विना) नारीं निष्फला लोकयात्रा।
- यावत्योगे— वनं यावद् अनुसरति
- निकषायोगे— सर्पं निकषा (समीपम्) न गन्तव्यम्।
- समयायोगे— ग्रामं समया (समीपम्) नदी
- हा-योगे— हा कृष्णाऽभक्तम्।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# कर्तृकरणसञ्ज्ञाप्रयुक्ततृतीयाविधानम्

लघुसिद्धान्तकौमुद्याम् (विभक्त्यर्थाः/ कारकम्)



- देवदत्तः पचति।
- स्थाली पचति।
- अग्निः पचति।
- तण्डुलः पच्यते।

देवदत्तः स्थाल्याम् अग्निना तण्डुलं पचति।
कर्ता अधिकरणम् करण कर्म

{मूलपाठः}

❖ कर्तृसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

सूत्रम्— स्वतन्त्रः कर्ता (१,४.५४)

अर्थः— क्रियायां स्वातन्त्र्येण विवक्षितोऽर्थः कर्ता स्यात्॥

❖ करणसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

सूत्रम्— साधकतमं करणम् (१,४.४२)

अर्थः— क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात्॥

❖ तृतीयाविभक्तिविधायकं विधिसूत्रम्—

सूत्रम्— कर्तृकरणयोस्तृतीया (२,३.२८)

अर्थः— अनभिहिते कर्तरि करणे च तृतीया स्यात्।

रामेण बाणेन हतो बाली।
कर्ता करणम् क्रिया कर्म

॥ इति तृतीया॥



क्रियायाः फलनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा तत्र करणं तत्तदा स्मृतम्॥

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥
{चक्षुः पश्यति। चक्षुषा पश्यति।}{ काष्ठानि पचन्ति। काष्ठैःपचति।}

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परिशिष्टतृतीयाविधानम्

लघुसिद्धान्तकौमुद्याम् (विभक्त्यर्थाः/ कारकम्)

- ❖ कर्मवाच्ये भाववाच्ये तृतीया कर्तृकारके।
  करणे च तथा हेतौ प्रकृत्यादेः प्रयोगतः ॥
- ❖ विशेषणे सहाद्यर्थे योगे विनादिभिस्तथा ।
  हीनार्थैर्वारणार्थैश्च ज्ञेयमन्यत् प्रयोगतः ॥
- ❖ ऊनार्थैर्वारणार्थैश्च सदृशार्थैस्तथैव च।
  अङ्गिनो विकृतिर्येन तृतीया स्यात् तदङ्गतः॥

- ▪ गुणिभिर्भूयते नम्रैः, शिशुभिर्दृश्यतेशशी ।
  चारैः पश्यन्ति राजानः, बाला हर्षेण नृत्यति ॥
- ▪ प्रकृत्या शीतलं वारि सुखं दुःखैर्विना नहि ।
  पशुधर्मेण हीनोऽयं, कृपणस्य धनेन किम् ॥
- ▪ विदुषां भूषणेनाऽलं, सज्जनैः सह संवसेत् ।
  जटाभिस्तापसो याति, अक्ष्णा काणोऽत्र विद्यते ॥
- ▪ न धर्मो दयया तुल्यो, न धनं विद्यया समम् ।
  सख्यं हि दुर्जनैः साकं प्रीति चापि न कारयेत् ॥

- ○ अनुक्ते कर्तरि – मया ओदनः पच्यते । तेन तत्र अभावि ।
- ○ करणे – हस्तेन गृह्णाति, रामो जलेन मुखं प्रक्षालयति ।
- ○ हेतौ - सुशीलः पुत्रः पितुः शासनेन ज्ञानवान् भवति, अध्ययनेन वसति ।
- ○ प्रकृत्यादौ— प्रकृत्या दयालुः नाम्ना श्यामोऽयम्, सुखेन जीवति, शिशुः क्लेशेन स्थातुं शक्नोति, अर्जुनः सरलतया पठति, प्रायेण मूर्खः ।
- ○ विशेषणे - दण्डेन ब्रह्मचारी |
- ○ सहार्थे- सद्भिः सह मैत्री विधेया । केनापि सार्धं विरोधो न कर्तव्यः । रामो जानक्या साकं वनं जगाम । वरं विरोधोऽपि समं महात्मभिः ।
- ○ विनादियोगे – श्रमेण ( श्रमं श्रमाद्वा ) विना किमपि न सिद्ध्यति।
- ○ चैत्रेण (चैत्रं चैत्राद्वा ) पृथक्।
- ○ हीनार्थे - विद्यया हीनः, अहंकारेण शून्यः पापेन रहितः, एकेन ऊनः ।
- ○ वारणार्थे— विवादेन अलम् ।
- ○ प्रयोजनार्थे— कोऽर्थः पुत्रेण जातेन।
- ○ सदृशे – अग्रजः पित्रा ( पितुः ) सदृशः समः तुल्यो वा ।
- ○ विकृतेऽङ्गे – अक्ष्णा काणः, शिरसा खल्वाटः, कर्णेन बधिरः ,पादेन खञ्जः, कट्या कुब्जः ।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# चतुर्थीविधानम्






(राजा) विप्राय गां ददाति
कर्ता सम्प्रदानम् कर्म दानक्रिया।

वृत्तौ 'दानस्य' इति पदं क्रियामात्रस्योपलक्षणं न तु दाधात्वर्थस्य। तेन ''चैत्रो मैत्राय वार्तां कथयति। रामः सीतायै वार्तां प्रेषयति। तुभ्यं हितम् उपदिशामि।'' इत्यादयः प्रयोगाः सिद्ध्यन्ति।

{मूलपाठः}

❖ सम्प्रदानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्—** कर्मणा यमभिप्रैति स सम्प्रदानम् (१,४.३२)

**अर्थः—** दानस्य= (दा)धात्वर्थस्य कर्मणा (सह सम्बन्धुं कर्ता) यम्= पदार्थम् अभिप्रैति= सम्बध्नाति/ सम्बन्धुमीप्सति स सम्प्रदानसंज्ञः स्यात्॥

❖ चतुर्थीविधायकं विधिसूत्रम्—

**सूत्रम्—** चतुर्थी सम्प्रदाने (२,३.१३)

**अर्थः—** विप्राय गां ददाति॥ अनभिहिते सम्प्रदाने चतुर्थी स्यात्।

❖ उपपदचतुर्थीविधायकं विधिसूत्रम्—

**सूत्रम्—** नमः-स्वस्ति-स्वाहा-स्वधाऽलं-वषड्-योगाच्च (२,३.१६)

**अर्थः—** एभिर्योगे चतुर्थी। हरये नमः। प्रजाभ्यः स्वस्ति। अग्नये स्वाहा। पितृभ्यः स्वधा।

**वार्तिकम्—** अलमिति पर्याप्त्यर्थग्रहणम्।

तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि॥ ॥इति चतुर्थी॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परिशिष्टचतुर्थीविधानम्

लघुसिद्धान्तकौमुद्याम् (विभक्त्यर्थाः/ कारकम्)

- सम्प्रदाने निमित्तार्थे क्रियायोगे च कुत्रचित्।
  शब्दैः शक्तसमर्थाद्यैर्नमःस्वस्तिहितादिभिः ॥
- रुचादिधातुयोगे च चतुर्थी विहिता भवेत् ॥
- क्रिययाऽभीप्सिताच्चैव धारिरुचिस्पृहादिषु ।
  तादर्थ्ये क्लृपियोगे चोत्पातज्ञापन एव च ॥
- हितयोगे तुमुन्योगे नम-आदिप्रयोगतः ।
  आशीर्वादे चतुर्थी स्यात् क्रुधादेः कर्मतस्तथा॥

- दरिद्रेभ्यो धनं देहि ज्ञानायाऽध्ययनं कुरु ।
  नमः श्रीरघुनाथाय स्वस्ति तुभ्यं महीपते ॥
- स्वाहाऽग्नये स्वधा पित्रे रोगिणे हितमौषधम्।
  शिशवे रोचते क्रीडा नृपः क्रुध्यति दस्यवे॥

- सम्प्रदाने— दरिद्राय धनं ददाति ।
- निमित्तार्थे(तादर्थ्ये)— परोपकाराय सतां विभूतयः । मुक्तये हरिं भजति।
- क्रियायोगे – शत्रवे (शत्रुम् ) मित्राय ( मित्रम् ) वा सर्वस्मै ( सर्वम् ) एवं सत्पथं दर्शयेत् ।
- शक्तादियोगे – अलं मल्लो मल्लाय। पित्रे नमः। प्रजाभ्यः स्वस्ति । छात्राय (छात्रस्य ) हितम् । ब्राह्मणाय हितम्।
- रुचादिधातुयोगे – हरये रोचते भक्तिः । मह्यं मोदकं रोचते।
- क्रुधादियोगे – स्वामी भृत्याय क्रुद्ध्यति। खलाः सज्जनेभ्यः असूयन्ति । दुर्योधनः पाण्डवेभ्यः ईर्ष्यति स्म। शठाः सर्वेभ्यो द्रुह्यन्ति । सीता रावणाय अकुप्यत् । (उपसर्गयुक्तयोः क्रुध्-द्रुहो योगे कर्मसंज्ञा एव भवति। यथा— क्रूरमभिक्रुध्यति अभिद्रुह्यति वा)
- क्रिययाऽभीप्सितः— युद्धाय सन्नह्यते। पत्ये शेते।
- धारिरुचिस्पृहादिषु—भक्ताय धारयति मोक्ष हरिः । हरये रोचते भक्तिः। पुष्पेभ्यः स्पृहयति ।
- तुमुन्योगे— (पठितुं यातीत्यर्थे)— पठनाय याति । (नृसिंहम् अनुकूलयितुं नमस्कुर्मः) – नृसिंहाय नमस्कुर्मः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# पञ्चमीविधानम्









{मूलपाठः}

❖ आपादानसञ्ज्ञाविधायकं सञ्ज्ञासूत्रम्—

**सूत्रम्— ध्रुवमपायेऽपादानम् (१,४.२४)**

अर्थः— अपायो= विश्लेषस्तस्मिन्साध्ये यद् ध्रुवम्=अवधिभूतं कारकं तदपादानं स्यात्॥

❖ पञ्चमीविधायकं विधिसूत्रम्—

**सूत्रम्— अपादाने पञ्चमी (२,३.२८)**

अर्थः— अनभिहिते अपादाने पञ्चमी स्यात्। ग्रामादायाति। धावतोऽश्वात्पततीत्यादि॥

॥ इति पञ्चमी॥

चेन्नैसंस्करणेऽयमधिकः पाठः— **भीत्रार्थानां भयहेतुः १-४-२५** भयार्थानां त्राणार्थानां च योगे भयहेतुरपादानं स्यात्। चौराद्बिभेति, चौरात्त्रायते। भयहेतुः किम्? अरण्ये बिभेति त्रायते वा ॥ *ल्यब्लोपे **कर्मण्यधिकरणे** च [वा १४७४-१४७५] प्रासादात्प्रेक्षते। आसनात्प्रेक्षते, प्रासादमारुह्यासने उपविश्येत्यर्थः ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परिशिष्टपञ्चमीविधानम्

लघुसिद्धान्तकौमुद्याम्
(विभक्त्यर्थाः/ कारकम्)

❖ अपादाने ल्यबर्थे च नियमाध्यापकात्तथा।
त्राण-वारण-भी-योगे यतोऽन्तर्धातुमिच्छति॥
❖ जनिकर्तुश्च हेतुभ्यां हेत्वर्थे तु विभाषया।
ऋते विनादिभिर्योगे पञ्चमी च स्मृता बुधैः॥

- धनाद् गरीयसी विद्या, रूपाद् रम्यतरो गुणः।
  लोभात् सञ्जायते पापं पापी स्वर्गात् पतत्यधः॥
- विपदस्त्रायते बन्धुः खलाद् बिभ्यति सज्जनाः।
  अधर्माल्लभते दुःखं लोभादुद्विजते मनः॥
- प्रासादात् प्रेक्षते भूपः पीठात् पश्यति बालकः।
  श्रमाद् विनान विद्या स्याद्, धर्मादन्योऽस्ति कः सुहृत्॥
- आमृत्योः श्रियमन्विच्छेद् ऋते ज्ञानात् कुतः सुखम्।
  त्रिदेवेभ्यः पृथग् देवान् यः पश्यति स दुर्मतिः॥

- अपादाने – वृक्षात् पत्रं पतति। ग्रामादागच्छति बालः।
- ल्यबर्थे कर्मणि – श्वशुरात् जिह्रेति (श्वशुरं वीक्ष्य) अधिकरणे - आसनात् प्रेक्षते।
- नियमपूर्वविद्यास्वीकारे – गुरोः अधीते।
- त्राण-वारण-भी-योगे – चोरात् त्रायते/बिभेति। यवेभ्यो गां वारयति।
- दिग्वाचकत्वे – उदधेरुत्तरं श्रीक्षेत्रम्।
- हेतौ – कस्मात् (कस्य, केन वा) हेतोः।
- विनार्थे – शिक्षायाः (शिक्षया शिक्षां वा) विना न कोऽपि ज्ञानं लभते।
- हीने – ब्राह्मणाद् हीनाः सर्व एव वर्णाः।
- ऋते – जलाद् ऋते पिपासा न दूरीभवति।
- बहिर्योगे – ग्रामाद् बहिः कोलाहलः श्रूयते।
- 'आ'योगे – आ-जीवनाद् दासोऽहं गुरोः।
- अधिके – सत्सङ्गादधिकं न किमप्यस्ति सुखम्। (सप्तमी अपि भवति)
- प्रभृतौ – माघात् प्रभृति शीतम्।
- अपेक्षार्थे– धनिनो विद्वान् श्रेष्ठो भवति।
- दूरार्थे – निवासस्थानाद् दूरं मल-मूत्रं त्यजेत्।
- कालवाचकत्वे– भोजनात् पूर्वं पादौ प्रक्षालयेत्।

# षष्ठीविधानम्



## षष्ठ्याः कारकत्वं नास्ति

षष्ठ्याः कारकत्वाभावे बीजं तु— सम्बन्धस्य क्रियाजनकत्वाभाव एव। यस्य हि क्रियया सह अन्वयो भवति, तदेव कारकमित्युच्यते। सम्बन्धस्य तु विशेष्यादिनैवाऽन्वयो भवति न तु क्रिययेति तस्य कारकत्वं नास्ति। यथा – 'रामस्य पुस्तकमानय' इत्यत्र आनयनरुप- क्रियाजनकत्वं पुस्तकस्यैव न तु रामस्य। रामसम्बन्धि पुस्तकमानयेति परम्परया क्रियाजनकत्वेऽपि रामपदस्य साक्षात् क्रियाजनकत्वाभावेन तस्याः कारकत्वं नाङ्गीक्रियते।

## यद्यपि सम्बन्धः उभयनिष्ठः तथाऽपि भेदकादेव षष्ठी

राज्ञः पुरुषः, रामस्य गृहम्, इत्यादौ स्वत्वं गृहपुरुषादौ, स्वामित्वं राज-रामादौ, इति तत्र षष्ठी सिद्धा। प्रकृते पुरुषसामान्यस्य भेदकं राज-पदं, गृहसामान्यस्य च रामपदमिति तत्र तत्रैव षष्ठीति फलितम्—

**भेद्यभेदकयोश्चैक-सम्बन्धोऽन्योऽन्यमिष्यते।**
**द्विष्ठो यद्यपि सम्बन्धः षष्ठ्युत्पत्तिस्तु भेदकात्।**

✓ भेद्यः=विशेष्यः/अनुयोगी। भेदकः= विशेषणम्/प्रतियोगी।

| | |
|---|---|
| राज्ञः पुरुषः (स्व-स्वामिभावः) | मर्कटस्य पुच्छम् (अङ्गाङ्गिभावः)। |
| दशरथस्य पुत्रः (पितृपुत्रभावः) | पाणिनेः शिष्यः (गुरुशिष्यभावः)। |

❖ षष्ठीविधायकं विधिसूत्रम्— **{मूलपाठः}**

**सूत्रम्— षष्ठी शेषे (२,३.५०)**

**अर्थः—** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः शेषस्तत्र षष्ठी। राज्ञः पुरुषः।

❑ कर्मादीनापि संबन्धमात्रविवक्षायां षष्ठ्येव।

(कर्ता) सतां गतम्। (करणम्) सर्पिषो जानीते। (कर्म) मातुः स्मरति। (कर्म) एधोदकस्योपस्कुरुते। (कर्म) भजे शम्भोश्चरणयोः॥

**चेन्नैसंस्करणेऽयमधिकः पाठः—**

**सूत्रम्— कर्तृकर्मणोः कृतिः (२,३.२८)**

**अर्थः—** कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात्।

कृष्णस्य कृतिः, जगतः कर्ता कृष्णः।

**सूत्रम्— उभयप्राप्तौ कर्मणि (२,३.२८)**

**अर्थः—** उभयोः प्राप्तिर्यस्मिन् कृति तत्र कर्मण्येव षष्ठी।

आश्चर्यो गवां दोहोऽगोपेन।

**॥इति षष्ठी॥**

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परिशिष्टषष्ठीविधानम्

लघुसिद्धान्तकौमुद्याम् (विभक्त्यर्थाः/ कारकम्)

❖ षष्ठी सर्वत्र सम्बन्धे कृद्योगे कर्तृकर्मणोः ।
निर्धारणाऽनादरयोः स्मृतिहिंसादिकर्मसु ॥
❖ कर्मादावपि षष्ठी स्यात् सम्बन्धस्य विवक्षया।
सर्वनाम्नस्तु हेतूक्तौ उक्त हेतौ च केवले ॥
❖ कृतिः स्यात् कर्तृ-कर्मभ्यां लादेशादौ तु खण्डिता।
कृत्ये कर्तुर्विकल्पेन तुल्यार्थाच्च तथा मता ॥

▪ निर्मलं हि सतां चित्तं दीनानां बन्धुरीश्वरः ।
शिष्याणां गुरवः पूज्या मित्रस्याभाषणं शृणु ॥
▪ वेधास्त्रिजगतां स्रष्टा प्रजानां पालको नृपः ।
नराणां क्षत्त्रियः शूरः पित्रोस्तुल्यं न देवतम् ॥

- सम्बन्धे— राज्ञः पुरुषः। रामस्य पुस्तकमिदम् ।
- सम्बन्धविवक्षायां — मातरं स्मरति' इत्यस्य स्थाने 'मातुः स्मरति' ।
- कर्तृकर्मणोः— कृष्णस्य कृतिः, जगतः कर्ता कृष्णः ।
- निर्धारणे — वर्णानां/वर्णेषु ब्राह्मणः श्रेष्ठः ।
- अनादरे — छात्रो याति बहिर्गुरोः । रुदतः शिशोः माता ययौ।
- हिंसार्थकर्मणि — चौरस्य निहन्ति ।
- हेतुशब्दप्रयोगे — अन्नस्य हेतोः वसति । निवासस्य हेतोर्याति।
- सर्वनाम्नः हेतुशब्दप्रयोगे — 'केन हेतुना इत्यस्य स्थाने', 'कस्य हेतोः' ।
- लादेशादौ तु — खण्डिता (षष्ठो न भवति ) ।
- कृत्यानां कर्तरि वा - मया मम वा सेव्यो हरिः ।
- तुल्यार्थैर्योगे वा — तुल्यः सदृशः समो वा कृष्णस्य कृष्णेन वा ।
- दूरसमीपे— नगरस्य दूरम्/समीपम्।
- कृते,समक्षम् मध्ये, अन्तरे, अन्तःयोगे— पठनस्य कृते आचार्यस्य समक्षम्। बालानां मध्ये। गृहस्य अन्तरे अन्तः वा।
- अतस्प्रत्ययान्तशब्दैर्योगे— नगरस्य दक्षिणतः /उत्तरतः।

# सप्तमीविधानम्



क्रियायाः आधारः

कर्ता — कर्तृनिष्ठ-क्रियाधारस्य → अधिकरणम् ← कर्मनिष्ठ-क्रियाधारस्य — कर्म





| रामः | कटे | आस्ते। |
|---|---|---|
| कर्ता | अधिकरणम् | उपवेशनक्रिया |

| रामः | स्थाल्यां | तण्डुलं | पचति। |
|---|---|---|---|
| कर्ता | अधिकरणम् | कर्म | पाकक्रिया |

**कर्तृकर्मव्यवहितामसाक्षाद्धारयत्क्रियाम्।**
**उपकुर्वत्क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥**

{मूलपाठः}

❖ अधिकरणसञ्ज्ञाविधायकं सूत्रम्—

**सूत्रम्— आधारोऽधिकरणम् (१,४.४५)**

**अर्थः—** कर्तृकर्मद्वारा तन्निष्ठ= कर्तृकर्मनिष्ठ -क्रियाया आधारः= आश्रयः कारकमधिकरणं स्यात्॥

❖ सप्तमीविधायकं विधिसूत्रम्—

**सूत्रम्— सप्तम्यधिकरणे च (२,३.३६)**

**अर्थः—** (अनुक्ते) अधिकरणे सप्तमी स्यात्, चकाराद्दूरान्तिकार्थेभ्यः।

**साक्षात्क्रियाधारस्याधिकरणसञ्ज्ञा कुतो न भवति ?**

*क्रियायाः= धात्वर्थस्य फलव्यापारोभयात्मकत्वेन साक्षाद्व्यापाररूपक्रियाया आधारः कर्ता, फलरूपायाः क्रियाया आधारः कर्म भवति। कर्मसञ्ज्ञया कर्तृसञ्ज्ञया च परत्वाद् बाधापत्या परम्परया क्रियाधारस्याधिकरणसञ्ज्ञा सिद्ध्यति।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सप्तमीविधानम्

लघुसिद्धान्तकौमुद्याम्
(विभक्त्यर्थाः/ कारकम्)



**१.औपश्लेषिकः—** उप= समीपे, श्लेषः= संयोगादिसम्बन्धः उपश्लेषः। उपश्लेषकृतः (आधारः) औपश्लेषिकः ऐकदेशिकः सामीपको वा। यथा— वने वसति। नद्यां स्नाति।

**२.वैषयिकः—** विषयकृतो वैषयिकः। यत्र वस्तुनो विषयता अस्ति। अयम् आधारो बुद्धिकृतो भवति। यथा—मोक्षे इच्छास्ति। विद्यायामनुरागो वर्तते। व्याकरणे रुचिः वर्तते।

**३.अभिव्यापकः—** अभि=सर्वतो भावेन व्याप्नोतीति अभिव्यापकः। अर्थात् यत्राधारस्य प्रत्येकस्मिन्नवयवे आधेयवस्तोः सत्ता विद्यते। यथा— तिलेषु तैलं वर्तते। दुग्धे माधुर्यमस्ति। पयसि घृतम्।

{मूलपाठः}

औपश्लेषिको वैषयिकोऽभिव्यापकश्चेत्याधारस्त्रिधा।

- कटे आस्ते। स्थाल्यां पचति।
- मोक्षे इच्छास्ति।
- सर्वस्मिन्नात्मास्ति।
- वनस्य दूरे अन्तिके वा॥

**॥ इति सप्तमी ॥**

**॥इति विभक्त्यर्थाः॥**

चेन्नैसंस्करणेऽयमधिकः पाठः—

*निमित्तात्कर्मयोगे [वा १४९०] निमित्तमिह फलं, योगस्संयोगसमवायात्मकः, तेन हेतुतृतीया न ॥

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
वालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# सप्तमीविधानम्

लघुसिद्धान्तकौमुद्याम्
(विभक्त्यर्थाः/ कारकम्)

## ❑ चकाराद्दूरान्तिकार्थेभ्यः— वनस्य दूरे अन्तिके वा॥

- ‘दूरान्तिकार्थेभ्यो द्वितीया च’ इति सूत्रेण दूरसमीपवाचकशब्दैः द्वितीया-पञ्चमी-तृतीया इति विभक्तित्रयाणां विधानं पूर्वं कृतम्। इदानीं सप्तमीविभक्तेः विधानेन दूरसमीपवाचकशब्दैः चतस्रः विभक्तयः भवन्ति।
- किन्तु ‘दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्’ इति सूत्रेण दूरसमीपवाचकशब्दैः योगे षष्ठी-पञ्चमी इति विभक्तिद्वयस्य विधानं भवति। लघुसिद्धान्तकौमुद्यां मूले दूरान्तिकशब्दैर्योगे ‘वनस्य’ इति षष्ठी दर्शिता। किन्तु तत्र ‘वनात्’ पञ्चम्यपि साधु।

- ✓ वनस्य दूरे/अन्तिके।
- ✓ वनस्य दूरम्/अन्तिकम्।
- ✓ वनस्य दूरेण/अन्तिकेन।
- ✓ वनस्य दूरात्/अन्तिकात्।

- ✓ वनाद् दूरे/अन्तिके।
- ✓ वनाद् दूरम्/अन्तिकम्।
- ✓ वनाद् दूरेण/अन्तिकेन।
- ✓ वनाद् दूरात्/अन्तिकात्।

# भाव/सतिसप्तमीविधानम्



## ❑ यस्य च भावेन भावलक्षणम्।

- यस्य ज्ञातक्रियया कालाद् अज्ञातक्रियान्तरस्य कालो लक्ष्यते, तत्र ज्ञातक्रियाश्रयात् (कर्तृ/कर्मवाचकात्) पदात् सप्तमी स्यात्।

➢ स कदा गतः ? छात्रेषु अधीयानेषु गतः (कर्तृनिष्ठक्रियोदाहरणम्)। अत्र अध्ययनं गमनं चेति द्वे क्रिये स्तः। अत्र अध्ययनक्रिया तस्य कालोऽपि ज्ञातः। किन्तु गमनक्रिया कालोऽनिर्ज्ञातः। अतः ज्ञातकालज्ञापक-अध्ययनक्रियाश्रयवाचकात् कर्तृरूपात् छात्रपदात् सप्तमी अनेन सूत्रेण विधीयते। 'अधीयानेषु' इत्यत्र सप्तमी तु 'छात्रेषु' इत्यस्य विशेषणत्वात् भवति। 'गोषु दुह्यमानासु गतः' इत्युदाहरणं तु कर्मनिष्ठक्रियोदाहरणम्)। अत्र दोहनक्रियाकालः ज्ञातः, गमनक्रिया कालोऽनिर्ज्ञातः। अतः ज्ञातकालज्ञापक- दोहनक्रियाश्रयवाचकात् कर्मरूपात् गोपदात् सप्तमी अनेन सूत्रेण विधीयते।। 'दुह्यमानासु' इत्यत्र सप्तमी तु 'गोषु' इत्यस्य विशेषणत्वात् भवति।

- (यत्र वाक्ये ज्ञातक्रिया न दृश्यते चेत्तत्र सति/सत्यां पदानां अध्याहारोऽपि क्रियते। तस्मात् सति सप्तमीति अस्य नामान्तरम्।) यथा— वसन्तसमये प्राप्ते(सति) काकः काकः पिकः पिकः।

संस्कृतसारः
छिद्यन्ते सर्वसंशयाः

# परिशिष्टसप्तमीविधानम्



❖ आधारे चैव निर्धारेऽवच्छेदे कालभावयोः ।
निमित्ते कर्मसंयोगे विभक्तिः सप्तमी भवेत् ॥

❖ सप्तमी त्रिविधाधाराद् दूरान्तिकार्थतोऽपि च।
भावान्तरं यतो लक्ष्यं कर्मयोगे निमित्ततः ॥

❖ नित्यैव सा मता सद्भिरथ निर्धारणं यतः ।
भृशानादरभावे च षष्ठी स्यात् सप्तमी तथा ॥

(छन्दोबद्धा-उदाहरण-माला)

- गुणेषु विनयः श्रेष्ठो गोषु कृष्णा पयस्विनी ।
  सभायां शोभते विद्वान् वर्षासु वर्धते नदी ॥
- चोरे गते स जागर्ति शिष्यो याति गते गुरौ
  चर्मणि द्वीपिनं हन्ति सीम्नि पुष्कलको हतः ॥

- त्रिविधाधारे— कटे आस्ते पात्रे भुङ्क्ते इत्यादि।
- निर्धारे/ निर्धारणे — नृणां नृषु वा द्विजः श्रेष्ठः ।
  छात्राणां छात्रेषु वा मैत्रः पटुः ॥
- अवच्छेदे – गृहीत इव केशेषु । बाल्ये विद्याम् उपार्जयेत् ।
- दूरान्तिकार्थेभ्यः— वनस्य दूरेऽन्तिके वा ।
- क्रियया क्रियान्तरलक्ष्ये— मयि आगते स गतः ( इयमेव सति सप्तमी )
- निमित्तात् कर्मयोगे — चर्मणि द्वीपिनं हन्ति ।
- भृशानादरभावे — रुदति पुत्रे, रुदतः पुत्रस्य वा पिता जगाम ।
- अधिकशब्दयोगे – लोके लोकाद्वा अधिको हरिः। (पञ्चमी अपि साधु)
- स्वामीश्वरादियोगे— गवां गोषु वा ईश्वरः /स्वामी। (षष्ठी अपि साधु)

# कारक/विभक्त्यर्थपरीक्षणम्

**०१.नियतोपस्थितिकः.............?**

क. परिमाणम्

ख. लिङ्गम्

**ग. प्रातिपदिकार्थः**

घ. वचनम्

**०२. प्रातिपदिकार्थमात्रे इत्यस्येदमुदाहरणं नास्ति—**

क. नीचैः

**ख.द्वौ**

ग. व्रीहिः

घ. ज्ञानम्

**०३. अभिहिते तु कर्मादौ का विभक्तिर्भवति—**

क. द्वितीया

**ख.प्रथमा**

ग. तृतीया

घ. षष्ठी

**०४. अधोलिखितेषु कस्मिन्नर्थे प्रथमा न विधीयते—**

क. सम्बोधने

ख. लिङ्गमात्राधिक्ये

ग. वचनमात्रे

**घ. अनभिहिते कर्मादौ**

**०५. 'दुह्याच्पच्....' इति कारिकायाम् अस्य धातोः पाठः नास्ति—**

क. मुष्

ख. चि

**ग. मृ**

घ. हृ

**०६. 'व्रजमवरुणद्धि गाम्' इत्यत्र व्रजमिति पदे कस्य कारकस्य अविवक्षा ?**

क. अपादानस्य

ख. करणस्य

ग. सम्प्रदानस्य

**घ. अधिकरणस्य**

**०७. 'गां दोग्धि पयः' इत्यत्र अकथितकर्म किम्—**

**क.गाम्**

ख. पयः

ग. उभयम्

घ. दुह्

**०८. 'माणवकं धर्मं भाषते' इत्यत्र 'धर्मम्' पदे केन कर्मत्वम्?**

क. अकथितं च

**ख.कर्तुरीप्सिततमं कर्म**

ग. तथायुक्तं चानीप्सितम्

घ. कर्मणि द्वितीया

**०९. एतेषु शुद्धं किम् ?**

क. देवदत्तः पचति।

ख. स्थाली पचति।

ग. अग्निः पचति।

**घ. सर्वाणि**

**१०. 'रामेण बाणेन हतो बाली' इत्यत्र करणं किम् ?**

क. रामेण

**ख.बाणेन**

ग. बाली

घ. हतः

**११. चतुर्थीविषये असङ्गतं कथनं चिनुत—**

क. 'दानस्य कर्मणा यमभिप्रैति' इत्यत्र **'दानस्य'** इति पदं क्रियामात्रस्योपलक्षणम्।

**ख.'क्रूरमभिक्रुध्यति' इत्यसाधु प्रयोगः।**

ग. 'चतुर्थी सम्प्रदाने'इत्यस्य— अनभिहिते सम्प्रदाने चतुर्थी स्याद् इति वास्तविकार्थः।

घ. 'नमः-स्वस्ति-स्वाहा-स्वधाऽलं-वषड्-योगाच्च' इति सूत्रे अलमिति पर्याप्त्यर्थग्रहणम्।

**१२. 'ध्रुवमपायेऽपादानम्' इति सूत्रे 'ध्रुवम्' इति पदस्य कोऽर्थः ?**

क. अस्थिरम्

ख. स्थिरम्

**ग. अवधिभूतम्**

घ. ध्रुवतारकम्

**१३. कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः संबन्धः...........।**

क. षष्ठी

ख. सम्बन्धः

**ग. शेषः**

घ. कर्म

**१४. कर्मादीनापि संबन्धमात्रविवक्षायां............।**

क. प्रथमा

ख. शेषः

ग. कर्म

**घ. षष्ठी**

**१५. 'सतां गतम्' इत्यत्र कस्य अविवक्षा ?**

क. कर्मणः

**ख.कर्तुः**

ग. सम्बन्धस्य

घ. अपादानस्य

**१६. कृद्योगे कर्तरि कर्मणि चोभयोः प्राप्तौ कर्मणि का विभक्तिः ?**

क. प्रथमा

ख. द्वितीया

**ग. षष्ठी**

घ. पञ्चमी

**१७. कर्मनिष्ठ-क्रियाधारस्य किमुदाहरणम् ?**

**क.स्थाल्यां तण्डुलं पचति।**

ख. रामः कटे आस्ते।

ग. वने वसति।

घ. सर्वाणि।

**१८. 'सर्वस्मिन्नात्मास्ति' इत्यत्र कीदृशाधारः ?**

क. औपश्लेषिकः

ख. वैषयिकः

**ग. अभिव्यापकः**

घ. नैमित्तिकः

**१९. एतेषु किमशुद्धम् ?**

क. वनस्य दूरम्/अन्तिकम्।

**ख.वने दूरेण/अन्तिकेन।**

ग. वनस्य दूरात्/अन्तिकात्।

घ. वनाद् दूरेण/अन्तिकेन।

**२०. 'गोषु दुह्यमानासु गतः' इति कस्योदाहरणम्—**

**क. यस्य च भावेन भावलक्षणम्**

ख. दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्

ग. सप्तम्यधिकरणे च

घ. आधारोऽधिकरणम्

**२१. एतेष्वशुद्धं वाक्यं चिनुत ?**

क. चर्मणि द्वीपिनं हन्ति ।

ख. पात्रे भुङ्क्ते।

ग. लोके अधिको हरिः।

**घ. चोरं गते स जागर्ति।**

**२२. 'व्याकरणे रुचिः वर्तते' इत्यत्र कीदृशाधारः ?**

क. औपश्लेषिकः

**ख.वैषयिकः**

ग. अभिव्यापकः

घ. नैमित्तिकः

**२३. एतेष्वशुद्धं वाक्यं चिनुत ?**

क. माघात् प्रभृति शीतम् ।

ख. ग्रामाद् बहिः कोलाहलः श्रूयते ।

**ग. जलस्य ऋते पिपासा न दूरीभवति।**

घ. उदधेरुत्तरं श्रीक्षेत्रम् ।

**२४. चलापादनस्य किमुदाहरणम् ?**

**क. धावतोऽश्वात्पतति।**

ख. विप्रः ग्रामादायाति।

ग. वृक्षात् पत्रं पतति।

घ. ग्रामाद् गच्छति।

**२५. तण्डुलानोदनं पचति इत्यत्र कस्याविवक्षा ?**

क. कर्मणः

**ख.करणस्य**

ग. अपादानस्य

घ. अधिकरणस्य